[1]पित्रार्जितधनैर्युक्तो बाल्ये चैव भविष्यति ।
स्वगोत्रज्ञातिवित्तासिर्भगिनीस्नेहिते[2]न च ॥ १४८१ ॥

षट्शतं च तदर्धं च चतुःशतमथापि वा ।
शताधिकधनं नित्यं वृद्धिवाणिज्य[3]हेतुना ॥ १४८२ ॥

कर्मेशांशग्रहदशाकाले मित्रविनाशनम् ।
भगिनी क्लेशमाप्नोति मात्ररिष्टमतः परम् ॥ १४८३ ॥

मालिन्यंशे स्वजननी वार्धके चित्तविभ्रमम् ।
वनान्तरे मृतिं चेति [4]व्याघ्रादिदुष्टजन्तुभिः ॥ १४८४ ॥

मन्यान्तरे मतङ्गांशे लाभेशे राहुसंयुते ।
क्रूरषष्ट्यंशदोषेण [5]मातुर्दुर्मरणं वदेत् ॥ १४८५ ॥

स्वपिता च स्वबाल्ये च स्त्रीहेतोः क्लेशमृत्युमान् ।
सन्निपातज्वरे [6]नैव देशाद्देशान्तरे मृतिः ।
मालिन्यंशे पूर्वभागे वयोमध्ये धनाढ्यवान् ॥ १४८६ ॥

वार्धके क्लेशदारिद्र्यं बाल्ये किञ्चित् सुखावहम् ।
त्रिचत्वारिंशतः पश्चात् क्लेशः[7] स्याद्वत्सरत्रयम् ॥ १४८७ ॥

भत्यग्दाये मध्यखण्डे दारारिष्टं विनिर्दिशेत् ।
विपद्दाये जन्मदेशे वासदेशे च वा यदि ॥ १४८८ ॥

राजान्तरं प्रकुर्वीत प्रत्यग्दाये तथैव च ।
कालिकांशकगे मन्दे मीने राहुसमन्विते ॥ १४९८ ॥

जन्मदाये जन्मदेशे विप्लवेन भयावधि ।
मण्डलाधिपतेर्मृत्युर्देशे राजान्तरे सुखम् ।
षोडशा[8]ब्दात् परं चेति लोके दुर्भिक्षजं[9] भयम् ॥ १४९० ॥

---

1. स्वपितार्जितनाना किञ्चिद्बाल्ये स्वपितार्जितम् ।
2. सदा
3. जीवनम्
4. दुष्टमन्त्रप्रयोगेण वा
5. माता
6. मृत्युः
7. हेतुं
8. षोडशाब्दे
9. दाम्भरम्

सूर्यांशगे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
मालिन्यंशे प्रजातस्य लोके दुर्भिक्ष[1]जं भयम् ॥ १४९१ ॥

मतङ्गयोगे जातस्य मत्यन्दाये तुलाशनौ ।
लोके धान्यक्ष[2]येणैव प्रजाक्षोभं विनिर्दिशेत् ॥ १४९२ ॥

व्यये राहुयुते मन्दे कालिकांशे शुभेक्षिते ।
[3]योगः केमिद्रुमोज्ञेयो मनोदुःखं भवेत्तदा ॥ १४९३ ॥

व्यये मन्दे सुखे जीवे [4]ह्यष्टमे चन्द्रसंस्थिते ।
[5]कर्तरीयोगविख्यातो केमिद्रुमसमो फले ॥ १४९४ ॥

[6]योगद्वये स्थिते चन्द्रे दशायां गुरुभुक्तिषु ।
मतङ्गयोगे जातस्य भार्यारिष्टं विनिर्दिशेत् ॥ १४९५ ॥

क्षिप्रेणोद्वाहमाप्नोति पश्चाच्छन्यन्तरे शुभम् ।
गुरुभुक्त्यन्तमारभ्य शनिभुक्तौ शुभावहम् ॥ १४९६ ॥

मत्यन्दाये विवाहः[7] स्याद्गेहे कल्याणसंभवः[8] ।
धनलाभं च [9]भवति कर्मलाभं महत् सुखम् ॥ १४९७ ॥

सर्वदाये चन्द्रभुक्तौ कुजभुक्तौ च ॥ यदि ।
जीवान्तरे ॥ सन्तापं मत्यन्दाये विशेषतः ॥ १४९८ ॥

कूर्मयोगे दशाकाले [10]परार्धे महत् सुखम् ।
बहुव्यापार[11]वृद्धिं च धनलाभं विनिर्दिशेत् ॥ १४९९ ॥

लाभेशांशे तत्त्रिकोणे षष्ठेशांशत्रिकोणके[12] ।
स्फुटयोगं गते मन्दे सहोदरविनाशनम् ॥ १५०० ॥

---

1. डाम्बरम्
2. अपरादीनि
3. एकयोगं मनस्तापं केमुद्रुमफलं वदेत् ॥
4. अष्टमे जातके
5. एकयोग कर्तरीतिर्विख्यातया भवेत् ॥
6. नेति केमुद्रुमे
7. विवाहे
8. संभवम्
9. प्रभवेत
10. अपरार्धे
11. वृद्धिः स्या
12. त्रिकोणगे

वत्सरे [1]त्वेकपञ्चांशे ह्यष्टचत्वारिवत्सरे ।
मान्दियंशे पूर्वभागे सहोदरविनाशनम् ॥ १५०१ ॥

कूर्मयोगे प्रजातस्य लग्नाधिपदशा [2]शुभा ।
दारान्तरे सुतप्राप्तिर्वार्धके स्त्रीसुखौख्यवान् ॥ १५०२

चन्द्रलग्नाधिपे भौमे दशायां गुरुभुक्तिषु ।
अतीव क्लेशकर्माणि [3]ह्यपमृत्युस्तथाश्रितः ॥ १५०३ ॥

स्वसमानजनारिष्टं स्त्रीप्रजानाशमेव च ।
तदभावे धनच्छेदं दशान्त्ये वा विनिर्दिशेत् ॥ १५०४ ॥

कुंभलग्ने च कीटांशे भृगुतस्य दशासुखम् ।
राहुदाये श्रियं चेति स्वपुत्रोद्वाहसंभ्रमम् ॥ १५०५ ॥

जीवान्तरे त्रिषष्ठ्यब्दे [4]मान्दियंशोद्भवस्य च ।
अपमृत्युभयप्राप्तिः शान्त्या शान्तिं प्रयास्यति ॥ १५०६ ॥

मतङ्गांशे तथा योगे कालकूटांश[5]जस्य च ।
सप्तसप्ततौ वा मृत्युर्नैधनेशदशान्त्यके[6] ॥ १५०७ ॥

वृषभादित्रिमासेषु अथवा मकरे[7]ऽपि च ।
सोमवारे भवेन्मृत्युरन्तःकाले न संशयः ॥ १५०८ ॥

मतङ्गांशे व्यये पापे दुर्गतिर्नात्र संशयः ।
पश्चात्रिंशत्[8]जन्मा च वार्धके पुत्रशोकवान् ॥ १५०९ ॥

अचलांशे स्थिरे लग्ने पूर्वभागे प्रजायते ।
विप्र[9]जन्मा सुखी नित्यं श्यामवर्णकृशाकृतिः ॥ १५१० ॥

---

1. एकपञ्चांशे
2. दशासुखम्
3. अपमृत्यु
4. मान्दियंशे प्रजातके
5. जातके
6. दशान्तगे
7. मकरेषु च
8. जन्मश
9. विप्रजन्मा

ज्येष्ठभ्रातृप्रियः साधुर्बाल्ये क्लेशेन कर्शितः ।
भगिनी[1]भर्तृमूलेन देशान्तरमुपाश्रितवान् ॥ १५११ ॥

लग्ने कुजे सिते जीवे [2]चाम्बरांशसमुद्भवः ।
पश्चाद्भ्रातृविहीनश्च [3]जातश्चेन्मृतिमादिशेत् ॥ १५१२ ॥

भगिनीद्वयवान् रागी [4]द्व्येकभ्रातृसमन्वितः ।
पितृसौख्यविहीनश्च मातृसौख्यविहीनवान् ॥ १५१३ ॥

उत्तरांशे प्रजातस्य [5]पितरौ च चिरायुषौ ।
पूर्वभागे ज्येष्ठ[6]भ्राता दीर्घमायुश्च विन्दति ॥ १५१४ ॥

कुग्रामे जनने चेति सम्प्रदाये विनिर्दिशेत् ।
पश्चिमार्णव[7]तीरे च गोकर्णप्रान्त्यदेशके[8] ॥ १५१५ ॥

बाल्ये संचारमाप्नोति दारिद्र्येण च कर्शितः ।
उत्तरांशे प्रजात[9]श्च जन्मदेशे सुभाग्यवान् ॥ १५१६ ॥

निलयेन विनिर्गत्य पश्चात् स्वस्थानमागतः[10] ।
मेषांशे कुम्भलग्ने च पुण्यक्षेत्रे सुभाग्यवान् ॥ १५१७ ॥

आन्ध्र[11]प्रमोश्च निकटे प्रान्त्यं चोत्तरोत्तरम् ।
पूर्वभागे मध्यखण्डे बाल्ये पितृविनाशवान् ॥ १५१८ ॥

[12]आयुष्मती च जननी जातस्य स्वचलांशके ।
लाभे शनिस्थिते सूर्ये [13]जातस्य स्वचलांशके ॥ १५१९ ॥

---

1. भ्रातृमूलेन
2. अम्बरांश सञ्जातके
3. जायते
4. एकभ्रातृ
5. पितृमातृचिरायुषम्
6. भ्रातृ
7. शर्णवतः प्रान्त्ये
8. देशगे
9. प्रजातस्य
10. आदिशेत्
11. प्रभुद्वारदेशे
12. जननी दीर्घमायुष्यमचलांशस्य जातके
13. अचलांशसजातके

सप्तद्वाये पि[1]तृरिष्टं देशत्यागं विनिर्दिशेत् ।
चन्द्रस्याष्टमाधीशदशायां पापभुक्तिषु ॥ १५२० ॥

स्वपितारिष्टमाप्नोति [2]मातृरिष्टं ततः परम् ।
अचलांशे मन्दे चन्द्रे कलत्रद्वययोगवान् ॥ १५२१ ॥

केचित्पक्षे [3]त्रिभार्यश्च दारसौख्यविहीनवान् ।
अचलांशे पूर्वभागे दारेशे शनिवीक्षिते ॥ १५२२ ॥

विवाहद्वयमित्याहु ज्येष्ठभार्या [4]ह्यपुत्रिणी ।
अचलांशे पूर्वभागे सुतेशे राहुवीक्षिते ॥ १५२३ ॥

लाभे मन्दे प्रजातश्च[5] सन्तानप्रतिबन्धवान् ।
उत्तरांशे महारोगी ज्येष्ठभार्याय वापि च ॥ १५२४ ॥

काकवन्ध्यापतिश्चैव पूर्वभागे [6]ह्यपुत्रवान् ।
मन्थान्तरे पूर्वभागे [7]जातस्य स्वचलांशके ॥ १५२५ ॥

कालान्तरे सुतप्राप्तिर्दारान्तरफलं स्मृतम् ।
लग्नाद् पञ्चमगे जीवे पापदृग्निरीक्षिते ॥ १५२६ ॥

अचलांशे प्रजातश्च पुराब्राह्मणशापवान् ।
तत्पापपरिहारार्थं सेतुस्नाने शिवार्चनम् ॥ १५२७ ॥

[8]नागलिङ्गप्रदानेन सन्तानप्राप्तिमादिशेत् ।
[9]सौवर्णं नागलिङ्गं च सोमवारे प्रदोषके ॥ १५२८ ॥

उपोष्य विधिवत् पूजां सायाह्ने दानमाचरेत् ।
अचलांशे पूर्वभागे लाभे [10]सूर्ये च संस्थिते ॥ १५२९ ॥

---

1. पिता
2 मातारिष्टं विनिर्दिशेत्
3. त्रिभार्या च
4. अपुत्रिणी
5. प्रजातस्य
6. अपुत्र
7. अचलांशस्य जातके
8. नागेश्वर प्रसादेन
9. फलमेकं तदर्धेन
10. सूर्यः प्रजायते

मातुलतादिपुण्येन पुत्रप्राप्तिर्न संशयः ।
ज्येष्ठभ्रातृसुताधीशे नीचांशे कुजवीक्षिते ॥ १५३० ॥

ज्येष्ठभ्रातृ[1]सुतश्चापि जले मृतिमवाप्नुयात् ।
अचलांशे पूर्वभागे भगिनीपुत्रयोगवान् ॥ १५३१ ॥

स्वमातुलवशात् सौख्यमावाप्य प्रियवान् सुखी ।
उत्तरांशे प्रजातस्य [2]भगिन्यौ द्वे सुपुत्रिके ॥ १५३२ ॥

पूर्वभागे तथा विन्ध्याद्वैकल्येन तु कर्शिता ।
निर्मलांशे विक्रमेशे [3]जातस्यत्वमलांशके ॥ १५३३ ॥

सोदराः पञ्च सप्तेति द्वित्रिसङ्ख्याचिरायुषी[4] ।
उत्तरांशे स्वभगिनी [5]त्वेका माङ्गल्यमश्नुते ॥ १५३४ ॥

पूर्वभागे च वैधव्यं सोदर्यौ[6] द्वे न संशयः ।
चन्द्रात् सप्तमगे शुक्रे [7]स्वसितेन निरीक्षिते ॥ १५३५ ॥

अचलांशे प्रजातस्य [8]मात्ररिष्टं विनिर्दिशेत् ।
सुखाधिपदशाकाले [9]होरादायेऽपि वा यदि ॥ १५३६ ॥

[10]पित्ररिष्टात् परं माता परलोकं प्रयास्यति ।
पूर्वभागे मध्यखण्डे [11]मातृरिष्टात् परं पिता ॥ १५३७ ॥

सम्प्रदाये मृतश्च[12] स्याद्दशवर्षात् परं भवेत् ।
अष्टमाब्दे द्वादशाब्दे [13]त्वथ वा षोडशाब्दके ॥ १५३८ ॥

चतुर्विंशेऽथ वा चेति मातापितृविनाशनम् ।
वर्गोत्तमे निशानाथे [14]जातस्य त्वचलांशके ॥ १५३९ ॥

---

1. सुतारिष्टं जलगण्डे विनिर्दिशेत्
2. भगिनी द्वौ सुपुत्रिणी
3. अचलांशस्य जातके
4. चिरायुषम्
5. एका
6. सोदरी द्वौ
7. असितेन
8. माता
9. हरेत् पापोऽपि
10. पिता
11. माता
12. जेति
13. अथवा षोडशाब्दे
14. अचलांशस्य जातके

सम्पद्द्वारे पि[1]तरिष्टं देशत्यागं विनिर्दिशेत् ।
चन्द्रलग्नाष्टमाधीशदशायां पापभुक्तिषु ॥ १५२० ॥

स्वपितारिष्टमाप्नोति [2]मात्ररिष्टं ततः परम् ।
अचलांशे मदे चन्द्रे कलत्रद्वययोगवान् ॥ १५२१ ॥

केचित्पक्षे [3]त्रिभार्यश्च दारसौख्यविहीनवान् ।
अचलांशे पूर्वभागे दारेशे शनिवीक्षिते ॥ १५२२ ॥

विवाहद्वयमित्याहु ज्येष्ठभार्या [4]ह्यपुत्रिणी ।
अचलांशे पूर्वभागे सुतेशे राहुवीक्षिते ॥ १५२३ ॥

लाभे मन्दे प्रजातश्च[5] सन्तानप्रतिबन्धवान् ।
उत्तरांशे महारोगी ज्येष्ठभार्याथ वापि च ॥ १५२४ ॥

काकवन्ध्यापतिश्चैव पूर्वभागे [6]ह्यपुत्रवान् ।
ग्रन्थान्तरे पूर्वभागे [7]जातस्य त्वचलांशके ॥ १५२५ ॥

कालान्तरे सुतप्राप्तिर्दोषान्तरफलं स्मृतम् ।
स्मात् पञ्चमगे जीवे पापद्वयनिरीक्षिते ॥ १५२६ ॥

अचलांशे प्रजातश्च पुराब्राह्मणशापवान् ।
तच्छापपरिहारार्थं सेतुस्नानं शिवार्चनम् ॥ १५२७ ॥

[8]नागलिङ्गप्रदानेन सन्तानप्राप्तिमादिशेत् ।
[9]सौवर्णं नागलिङ्गं च सोमवारे प्रदोषके ॥ १५२८ ॥

उपोष्य विधिवत् पूजां सायाह्ने दानमाचरेत् ।
अचलांशे पूर्वभागे लाभे [10]सूर्ये च संस्थिते ॥ १५२९ ॥

---

1. पिता
2. मात्ररिष्टं विनिर्दिशेत्
3. त्रिभार्या च
4. अपुत्रिणी
5. प्रजातस्य
6. अपुत्र
7. अचलांशस्य जातके
8. नागेश्वर प्रसादेन
9. फलमेक तदर्पेन
10. सूर्यः प्रजायते

मानुत्रतादिपुण्येन पुत्रप्राप्तिर्न संशयः ।
ज्येष्ठभ्रातृसुताधीशे नीचांशे कुजवीक्षिते ॥ १५२० ॥

ज्येष्ठभ्रातृ[1]सुतश्चापि जले मृतिमवाप्नुयात् ।
अचलांशे पूर्वभागे भगिनीपुत्रयोगवान् ॥ १५२१ ॥

स्वमातुलवशात् सौख्यमावाल्ये प्रियवान् सुखी ।
उत्तरांशे प्रजातस्य [2]भगिन्यौ द्वे सुपुत्रिके ॥ १५२२ ॥

पूर्वभागे तथा विन्द्याद्वैधव्येन तु कर्शिता ।
निर्मलांशे विक्रमेशे [3]जातस्यत्वमलांशके ॥ १५२३ ॥

सोदराः पञ्च सप्तेति द्वित्रिसङ्ख्याचिरायुषी[4] ।
उत्तरांशे स्वभगिनी [5]त्वेका माङ्गल्यमश्नुते ॥ १५२४ ॥

पूर्वभागे च वैधव्यं सोदर्यौ[6] द्वे न संशयः ।
चन्द्रात् सप्तमगे शुक्रे [7]स्वसितेन निरीक्षिते ॥ १५२५ ॥

अचलांशे प्रजातस्य [8]मातृरिष्टं विनिर्दिशेत् ।
तुलाधिपदशाकाले [9]होरादायेऽपि वा यदि ॥ १५२६ ॥

[10]पितृरिष्टात् परं माता परलोकं प्रयास्यति ।
पूर्वभागे मध्यखण्डे [11]मातृरिष्टात् परं पिता ॥ १५२७ ॥

सप्तद्वाये मृतश्च[12] स्याद्दशवर्षात् परं भवेत् ।
अष्टमाब्दे द्वादशाब्दे [13]अथ वा षोडशाब्दके ॥ १५२८ ॥

चतुर्विंशेऽथ वा चेति मातापितृविनाशनम् ।
वर्गोत्तमे निशानाथे [14]जातस्य त्वचलांशके ॥ १५२९ ॥

---

1. सुतारिष्टं जलगण्डं विनिर्दिशेत्
2. भगिनी द्वौ सुपुत्रिणी
3. अचलांशस्य जातके
4. चिरायुषम्
5. एका
6. सोदरी द्वौ
7. असितेन
8. माता
9. हरेत् पातोऽपि
10. पिता
11. माता
12. जेति
13. अथवा षोडशाब्दे
14. अचलांशस्य जातके

उच्चांशे विपद्दाये संधिकाले [1]दरिष्टकृत् ।
जन्मदेशं परित्यज्य पूर्व[2]भागोद्भवस्य च ॥ १५४० ॥

देशान्तरे [3]मातृपित्रोररिष्टं मनुरब्रवीत् ।
महाशनाडीविस्तारे[4]प्रस्ताराष्टकवर्गके ।
अचलांशे प्रजातस्य फलमन्यद्विचार्यताम् ॥ १५४१ ॥

स्वोच्चांशगे निशानाथे निर्मलांशे [5]च संस्थिते ।
वेदान्त[6]शास्त्रतत्त्वज्ञः सदा[7]ह्याह्निककर्मवान् ॥ १५४२ ॥

अतिभक्तिरतो नित्यं निर्मलांशे निशाकरे ।
सात्त्विको गुणवान् रागी हरिशङ्करभक्तिमान् ॥ १५४३ ॥

विप्लवेन विनिर्गत्य दशवर्षात् परं [8]मृतिम् ।
द्वादशाब्दात् परं [9]श्रुत्वा नानादेशेषु संचरन् ॥ १५४४ ॥

पितृमातृविनाशेन क्लेशं प्राप्नोति भूरिशः ।

महानदीतीरपुरे निवासे
योगं वदेद्देवचलांश[10]जस्य ।
अतीव सौख्यं मुनयो वदन्ति
विपद्दशान्त्यादि[11] सुभाग्यवृ[12]द्धिम् ॥ १५४५ ॥

क्षेमदाये महद्भाग्यं चत्वारिंशे महाविपत् ।
त्रिंशोपरि सुभाग्याप्ति[13] राजान्तरवशात् सुखम् ॥ १५४६ ॥

राज्येशांशे तत्त्रिकोणे तत्सप्तमे[14]ऽथ गोचरे ।
योगभङ्गं मनस्तापं शनि[15]चारवशात् फलम् ॥ १५४७ ॥

1. अरिष्टकृत्
2. भागस्य जातके
3. पिता माता
4. विस्तारं
5. निशाकरे
6. ज्ञान
7. ह्याह्निक
8. विपत्
9. चेति
10. जातः
11. दशान्त्यादि
12. वृद्धिः
13. भाग्याप्तिः
14. सप्तमे वा
15. शनिवार्

षष्ठेशांशत्रिकोणस्थे स्फुटयोगं गते शनौ ।
अतीव क्लेशकार्याणि देशत्यागं विनिर्दिशेत् ॥ १५४८ ॥
लग्नाधिपदशाकाले [1]त्वतीव श्रियमश्नुते ।
[2]घूनाधिपदशा मृत्युरापत्सन्यासयोगवान् ॥ १५४९ ॥

—: * :—

## तुलालग्ने अगदांशः ॥

अगदांशकगे जीवे लाभेऽर्के भृगु संयुते ।
तुलालग्ने प्रजातश्च [3]गौरवर्ण. शुभाकृतिः ॥ १५५० ॥
अगस्त्यंशे पूर्वभागे [4]स्वगदांशकगे गुरौ ।
भृगुजेन युते दृष्टे सोदरभ्रातृभ्रात्रिमान् ॥ १५५१ ॥
ज्येष्ठभ्रातृयुतो मानी [5]जीवमातृयुतः सुखी ।
सुतप्रजाबहुत्वं स्याद्राजवेशो सुभाग्यवान् ॥ १५५२ ॥
अगदांशकगे जीवे लाभे द्विग्रहसंयुते ।
कनिष्ठभ्रातृमान् रागी ज्येष्ठभ्राता[6] द्विभार्यवान् ॥ १५५३ ॥
सिंहे सिंहांशके[7] जीवे शास्त्रविद्याविशारदः ।
श्रीमान् वाग्मी सुखी भोगी धर्मिष्ठः सात्त्विकप्रियः ॥ १५५४ ॥
अगस्त्यंशे पूर्वभागे [8]जातस्य तौरिभके ।
इदमेव फलं सत्यं [9]जातस्य स्वगदांशके ॥ १५५५ ॥
सिंहे सिंहांशके[10] जीवे मीनकाले प्रजायते ।
विष्णुभक्तिरतो नित्यं देवब्राह्मणभक्तिमान् ॥ १५५६ ॥

---

1. त्वतीव
2. न्यूनाधिप
3. प्रजातस्य
4. अगदांशक
5. मातृदीर्घायुमान्
6. भ्रातृ
7. सिंहांशगे
8. तुलालग्नस्य जातके
9. तुलालग्नगदांशस्य जातके
10. सिंहांशगे

सिंहे जीवे मीनकाले वैदिकाचारवान् सुखी ।
अवैदिकमताचारं शनियोगे प्रजायते ॥ १५५७ ॥

ग्रन्थान्तरे नारदीये [1]भगदांशसमुद्भवः ।
हरिभक्तिरतो नित्यं मीनकाले शुभाग्यवान् ॥ १५५८ ॥

चन्द्रकालाधिपे शुक्रे सूर्यकालाधिपे गुरौ ।
अन्योन्य[2]दृष्टियोगेन लाभे भाग्य[3]वशी च तौ ॥ १५५९ ॥

चन्द्रकालाधिपे शुक्रे लाभेशेन समन्विते ।
स्वजातिधर्मतत्त्वज्ञो मतभेदे[4] कुयुक्तिमान् ॥ १५६० ॥

[5]शुक्रे शनियुते जातः क्रोधी[6] लुब्धो विचक्षणः ।
स्त्रीलोलश्चपल. श्रीमान् तामसः सत्यविक्रमः ॥ १५६१ ॥

श्रीमान् मनोहराङ्गश्च [7]स्वगदांशे सुबुद्धिमान् ।
लिपित्रयप्रवीणश्च [8]अरोगदृढगात्रवान् ॥ १५६२ ॥

लाभेशांशगते शुक्रे रविजेन युतेक्षिते ।
अगत्यंशे प्रजातश्च रत्नान्वेषी सुबुद्धिमान् ॥ १५६३ ॥

सिंहे वर्गोत्तमे जीवे मेषारूढेऽल्पपुत्रवान् ।
मृतप्रजाबहुत्वं स्याच्छुक्रार्कियुतवीक्षिते ॥ १५६४ ॥

जीवे शनियुते जातः शान्तः शास्त्रार्थकोविदः ।
स्वतन्त्रः परकार्यज्ञश्चपलश्चबलात्मवान् ॥ १५६५ ॥

विदेशवासी मतिमान् पुत्रशोकेन कर्शितः ।
भगदांशकगे सूर्ये मीने[9]काले सुभाग्यवान् ॥ १५६६ ॥

मीनांशे नवमे सूर्ये स्वपिता भ्रातृहीनवान् ।
कालान्तरे भ्रातृशोकमरणानुजयुतः सुखी ॥ १५६७ ॥

---

1. भगदांशस जातके — 2. शुभकार्येण
3. भव: सुखी — 4. मतभेदः
5. शुक्रः शनियुतो — 6. क्रोधो
7. भगदांशे — 8. अरोग — 9. मीने

सूर्ये [1]यावत्फलानि स्युर्मद्युक्तांशकैस्तथा ।
[2]तावत् पितुः सोदराणां सङ्ख्यानि परिचिन्तयेत् ॥ १५६८ ॥

धनपुत्रमित्र[3]तुर्ये द्विजदेवार्चने तथा ।
[4]द्वेषी पितॄणां नवमे तपने सति कृष्णः स्यात् ॥ १५६९ ॥

सुन्दरः सुखवान् रागी सत्कलत्रप्रियः सुखी ।
भाग्ये बुधयुते सूर्ये मेधावी कुजसंयुते ॥ १५७० ॥

भाग्ये राहौ प्रसन्नो[5] च नदीशेन समन्विते ।
पितृमातृविहीनश्च प्रतिबन्ध[6]कसंयुतः ॥ १५७१ ॥

[7]पितरिष्टस्य काले वा मा[8]तरिष्टेऽथ वा यदि ।
देशान्तरे निवासश्च अथ ग्रामान्त[9]रेऽपि वा ॥ १५७२ ॥

वनान्तरपुरे वासी[10] नवमे राहु[11]संस्थिते ।
नदीमान्त्येऽथ वा चेति सोमांशे भाग्यवान् सुधीः ॥ १५७३ ॥

स्वभार्यासोद[12]राणां च बहूनां नाशमीरयेत् ।
[13]दुःखिता दारमाता च पुत्रशोकेन कर्शिता ॥ १५७४ ॥

जगत्यंशे पूर्वभागे श्वश्रूश्वशुरभक्तिमान् ।
दारर्व[14]शात सुभाग्यातिलब्धाद्दानन्तर सुखम् ॥ १५७५ ॥

मध्यायुर्योगवान् वाग्मी तेजस्वी गुरुभक्तिमान् ।
लाभे भृगुयुते जीवे [15]भगदांशे धनी सुखी ।
शनियोगे प्रजातश्च[16] मृतपुत्रबहुत्ववान् ॥ १५७६ ॥

---

1. फलं सन्ति भेदराशिश्च वा यदि
2. स्वपिता सोदरश्चैव
3. वाग्मी द्विजदेवतापूजनेऽतिभक्तश्च
4. पितृमातृद्वेषी नवमे तपनेऽति
5. राहुप्रसन्नश्च
6. प्रतीबन्धवान्
7. पिता
8. माता
9. ग्रामान्तरमथापि वा
10. वार्ता
11. राहुजातके
12. सोदरभ्रातृबहुत्वं
13. स्वदारजननी दुःखी
14. दारवंशे
15. भगदांशे
16. प्रजातस्य

अदृष्टयत्नमूलेन पुत्रायुर्वृद्धिमादिशेत् ।
अगदांशकगे जीवे पितृसौख्यविहीनवान् ॥ १५७७ ॥

[1]स्वमात्रा सह संयुक्तोभ्रातृसौख्यसमन्वितः ।
भ्रातृद्वयमनुजश्च भगिन्येका सुमङ्गली ॥ १५७८ ॥

एका क्लेशवती चेति सोदरभ्रातृभ्रान्तिमान् ।
भ्रातृसौख्यसमायुक्तः पुत्रशोकेन कर्शितः ॥ १५७९ ॥

भ्रातृश्रेष्ठः सुखी नित्यं पुत्रभाग्याभिवृद्धिमान् ।
सन्तानारिष्टदोषार्थमगदां[2]शोद्भवस्य च ॥ १५८० ॥

शिशुमारप्रदानेन पुत्रायुश्च [3]प्रवर्धने ।
सुतेशांशकगे चन्द्रे भूसुतेन निरीक्षिते ॥ १५८१ ॥

विषाग्निना सुतारिष्टं तदभावे जलेन[4] च ।
तद्दोषपरिहारार्थं चन्द्र[5]शान्तिं समाचरेत् ॥ १५८२ ॥

उमामहेश्वरं [6]कृत्वा कल्पोक्तविधिमार्गतः ।
उमापतिं महादेवं ध्यात्वा चन्द्रकलाधरम् ॥ १५८३ ॥

काल[7]ज्ञाय प्रदातव्यं पुत्रभाग्याभिवृ[8]द्धये ।
चन्द्रलग्नाष्टमे मन्दे गुरुशुक्रसमन्विते ॥ १५८४ ॥

पुराब्राह्मणशापेन सन्तानारिष्ट[9]संभवः ।
तद्दोषपरिहारार्थं सेतुस्नानमथव्ययकम् ॥ १५८५ ॥

[10]सौवर्णनागदानं [illegible] प्रतिष्ठाजपसंयुतम् ।
[11]आयुष्मन्तं च तनयं लभते स्वागदांशजः ॥ १५८६ ॥

---

1. स्वमातृसुखसमायुक्तः
2. अगदांशस्य जातके
3. विवर्धनः
4. जलेषु च
5. प्रार्थनमादित्
6. दानं
7. कालज्ञस्य प्रदानेन
8. वृद्धिकृत्
9. शोकवान्
10. स्वर्णनागेश्वरं दानं प्रतिष्ठादिमतं चरेत्
11. पश्चात् सन्तानमायुष्यं मगदां शस्य जातके ।

[1]द्वौ पुत्रौ कन्यकाप्येका दीर्घमायुश्च विन्दति ।
पराशरमते जीवे [2]स्वगवांशे च संस्थिते ॥ १५८७ ॥

[3]आयुष्मन्तौ च पुत्रौ द्वौ शेषं नाशमितीरयेत् ।
[4]चन्द्रलग्नाष्टमे मन्दे स्यादेकादशेऽपि च ॥ १५८८ ॥

मृतप्रजारिष्टशान्तिं कारयेद्विधिवत् क्रमात् ।
तद्भावे गार्ग्य[5]मते जातो जातो मृतो भवेत् ॥ १५८९ ॥

शान्तिकर्म[6]कृते चैव ह्यायुष्मान् जायते सुतः ।
यद्भावस्याष्टमे मन्दे [7]यद्भावस्य त्रिकोणके ॥ १५९० ॥

[8]तद्भावस्य क्लेशश्च तत्काले भविष्यति ।
लग्नाद्वा चन्द्रलग्नाद्वा योजयेत् कालवित्तमः ॥ १५९१ ॥

गोचरेण फलं [9]योज्यं दशाभुक्तिविधानतः ।

दारेशसंबन्धदशाविपाके
लग्नेशसंबन्धदशान्तरे वा ।
भाग्याभिवृद्धिश्रियमाकरोति
कलत्रलाभं प्रवदन्ति सन्तः ॥ १५९२ ॥

भगवांशगे जीवे विपद्भावे सभुक्तिषु ।
जीवान्तरेऽथ वा चेति विवाहोत्सवमादिशेत् ॥ १५९३ ॥

सम्पद्भावे सप्तमाब्दे मौञ्जीबन्धनमादिशेत् ।
पश्चाज्ज्वर[10]भयेनैव दशासन्धौ प्रपीडितः ॥ १५९४ ॥

बाल्ये [11]मान्द्यज्वरभये क्षिप्रेणारोग्यमादिशेत् ।
पूर्वार्द्धके ततः पश्चान्मसूरीज्वर[12]तापितः ॥ १५९५ ॥

---

1. द्विसुतः कन्यकालस्य
2. अष्टांशस्य जातके
3. सन्तानद्वयमायुष्यं
4. चन्द्रलग्नाष्टमे
5. दोरे जाते जातं मृतप्रजा
6. सुपुत्रादिर्दीर्घमायुश्च विन्दति
7. तद्भावस्याष्टमे स्थिते
8. तद्भावक्लेशमाप्नोति तत्काले च भविष्यति
9. तस्य
10. ज्वरभयं गण्डे
11. मान्द्यज्वरभयं
12. ज्वरगण्डवान्

जननीव्याकुलं चेति मातृवंशेऽप्यरिष्ट[1]जम् ।
पितृव्यजनसन्तापं सम्पद्दाये शुभाशुभम् ॥ १५९६ ॥

स्वमातृसोदरा[2]णां च क्लेशो भवति भूरिशः ।
[3]ज्येष्ठभ्रातुर्विवाहश्च सम्पदारदशान्त्यके ॥ १५९७ ॥

विपद्दाये जातकस्य द्वादशाब्दात् परं शुभम् ।
भगदांशकगे जीवे षोडशाब्दे विवाहवान् ॥ १५९८ ॥

मनुवर्षेऽथवा चेति [4]ह्येकोनविंशवत्सरे ।
विद्यालाभं ततः पश्चाच्छास्त्राभ्यास[5]रतः सुखी ॥ १५९९ ॥

[6]दारवंशाद्वासभाग्यो विपद्दाये श्रिया [7]युतः ।
[8]भाग्यराहुदशाकाले भाग्येशांशत्रिकोणके[9] ॥ १६०० ॥

स्फुटयोगं गते मन्दे [10]पित्रारिष्टं विनिर्दिशेत् ।
स्वमाता विधवाभूत्वा चिरकालं सुजीवति ॥ १६०१ ॥

विपद्दाये दारवंशे भाग्यवृद्धिवशात् सुखम् ।
श्वशुराधिपतौ जीवे सिंहे वर्गोत्तमांशके[11] ॥ १६०२ ॥

भगदांशे प्रजातस्य श्वशुरश्च त्रिभार्यकः[12]
स्वदारवंशनाश[13]स्यात् कीर्तिभोगयुत. सुखी ॥ १६०३ ॥

तृतीयाब्दे [14]ह्यनावृष्टिर्लोके दुर्भिक्षजं भयम् ।
पञ्चविंशे चतुर्विंशे सप्तविंशे [15]च वत्सरे ॥ १६०४ ॥

---

1. अरिष्टकृत्
2. सोदरादीनि क्लेशं प्राप्नोति
3. स्वज्येष्ठ भ्रातुरुद्वाहं
4. एकोनाब्देऽथ वा यदि
5. प्रदः
6. दारवंशे सुभाग्याप्तिः
7. श्रियावहम्
8. भाग्ये
9. त्रिकोणगे
10. पितारिष्टं
11. वर्गोत्तमांशगे
12. भार्यवान्
13. प्राबल्यकीर्ति
14. अनावृष्टिर्लोके दुर्भिक्षडामरम्
15. सप्तविंशेति

[1]राहुयुक्तार्किदोषेण लोके दुर्भिक्षमादिशेत् ।
भगदांशकगे जीवे स्थिरराशिचतुष्टये ॥ १६०५ ॥
स्फुटयोगं गते मन्दे राज्याधिपतिनाशनम् ।
अष्टमाब्दे जन्मदेशे मण्डलाधिपतेर्विपत् ॥ १६०६ ॥
स्त्रीराज्यकाले भाग्यास्तिर्दारवंशे [2]भिया युतः ।
लाभेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ १६०७ ॥
लाभेशदृष्टिराशौ तु जननी व्याकुलं महत् ।
दारवंशे मनस्तापं योगभङ्गं शुभाशुभम् ॥ १६०८ ॥
साधना[3]न्त्यात् परे चेति दारवंशेऽ[4]प्यरिष्टजम् ।
धनेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ १६०९ ॥
धनेशदृष्टिराशौ तु दारवेशजनाश्यपि ।
तदभावे कलत्रस्य देहजाड्यवशाद्व्यथा ॥ १६१० ॥
सन्तानक्लेशमाप्नोति श्वशुरादिप्रपीड[5]कम् ।
भाग्यराहुदशाकाले कर्माधिपतिभुक्तिषु ॥ १६११ ॥
धनाधिपान्तरे चापि धनलाभं विनिर्दिशेत् ।
भाग्यराहुदशाकाले रन्ध्राधिपतिभुक्तिषु ॥ १६१२ ॥
देशत्यागं मनस्तापं योगभङ्गं शुभाशुभम् ।
चन्द्रान्तरे ततः पश्चात् स्वस्थानप्राप्तिमादिशेत् ॥ १६१३ ॥
कुजान्तरे योगभङ्गं स्थानच्युतिवशाद्व्य[6]थाम् ।
षड्विंशाब्दात् परं [7]भाग्ये लक्ष्मीयोगं द्विवत्सरम् ॥ १६१४ ॥
विशेषकाम्भूषाप्ति[8] पुत्रलाभं विनिर्दिशेत् ।
भाग्ये भाग्यांश[9]के राहौ दशान्त्ये बहुलाभवान् ॥ १६१५ ॥

1. लभांशुशानि
2. धियायहम्
3. साधनाब्दात्
4. अरिष्टकृत्
5. प्रपीडकृत्
6. वशाद्व्यथा
7. योगं
8. भूषाप्तिः
9. अंशगे राहु

दशामध्ये मनस्तापं दशादौ शुभमादिशेत् ।
सर्वदाये शुक्रभुक्तौ सर्वभुक्तौ च वा यदि ॥ १६१६ ॥

अगदांशे प्रजातस्य स्वजनारिष्टमादिशेत् ।
स्वर्क्षे वर्गोत्तमे.स्वांशे शुभांशे[1] वा दशान्त्यके ॥ १६१७ ॥

अतीव क्लेशमाप्नोति दशासंधौ न दोषभाक् ।
अगदांशे विपद्याये संधिकाले शुभावहम् ॥ १६१८ ॥

ग्रामान्तरादिसंचारं धनलाभं विनिर्दिशेत् ।
लग्नेशांशे तत्त्रिकोणे स्फुटयोगे गते गुरौ ॥ १६१९ ॥

लग्नेशदृष्टिराशौ तु सोदरोत्पत्तिमादिशेत् ।
भाग्येशांशे तथा विन्यालग्नेशांशे तथैव च ॥ १६२० ॥

स्फुटयोगे गते जीवे मातुलाम इति स्मृतम् ।
भाग्येशांशे तत्त्रिकोणे [2]स्वक्षेत्रांश त्रिकोणके ॥ १६२१ ॥

स्फुटयोगे गते जीवे सन्तानोत्पत्तिमादिशेत् ।
मेलापगांशगे चन्द्रे [3]द्वेकोनत्रिंशकस्तरे ॥ १६२२ ॥

योगभङ्गं मनस्तापं स्वस्थानच्युतिमादिशेत् ।
अष्टांशे शुभाग्याप्ति[4] लक्ष्मीयोगवशात् सुखम् ॥ १६२३ ॥

ततः पश्चात् क्रूरकार्यं पश्चाद्विपत्तिदायके[5] ।
षष्ठेशांशे तत्त्रिकोणे स्फुटयोगे गते शनौ ॥ १६२४ ॥

षष्ठेशदृष्टिराशौ तु ज्येष्ठभ्रातृमनोव्यथा ।
स्वज्येष्ठभ्रातृभार्या[6]देररिष्टमिति चादिशेत् ॥ १६२५ ॥

क्षिप्रेणे द्वादशः पश्चात् संचितद्रविणव्ययम् ।
विक्रमेशदशाकाले [7]जातस्य स्वगदांशके ॥ १६२६ ॥

---

1. शुभांशस्य नवान्त्यगे
2. स्वदेशांशत्रिकोणगे
3. एकोन
4. भाग्याप्तिः
5. दायगे
6. भार्यादि अरिष्ट
7. अगदांशस्वजातके

धनान्तरपुरे मासि खेदमोदं शुभावहम् ।
व्ययाधिपान्तरे काले लोके दुर्भिक्षजं[1] भयम् ॥ १६३८ ॥

प्रजाक्षोभं प्रकुर्वीत बन्धुवर्गे विशेषतः ।
शनिद्वितीयपर्याये गोचरे स्वोच्चराशिगे ॥ १६३९ ॥

बुधान्तरे तृतीयांशे स्वस्थानप्राप्तिमान् सुखी ।
नीचांशके भाग्यदाये [2]रन्ध्राधिपतिदायके ॥ १६४० ॥

भाग्याधिपान्तरे काले नीचभङ्गं महत् सुखम् ।
तुलाशनौ मातृवर्गे पितृवर्गेऽथ वा यदि ॥ १६४१ ॥

क्रूरमासे मनस्तापं क्षेमदाये फलं स्मृतम् ।
सप्तमाधिपतौ भौमे मन्दांशे बुधसंयुते ॥ १६४२ ॥

स्वभ्रातृकन्यकोद्वाहं श्वशुर[3]श्चाप्यपुत्रवान् ।
ग्रन्थान्तरे गर्ग[4]मते केचित्पक्षैकपुत्रवान् ॥ १६४३ ॥

श्वशुरस्य फलं सत्यं दीर्घमायुश्च विन्दति ।
भौमांशके[5] तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ १६४४ ॥

क्लेशं चान्नारके देशे प्रजाक्षोभं विनिर्दिशेत् ।
मण्डलाधिपतेर्मृत्यु स्तुलान्त्ये वृश्चिके शनौ ॥ १६४५ ॥

मेषान्ते वृषभे वापि कुलीरान्ते च सिंहगे ।
मीनत्रिकोणगे मन्दे सेनामात्यनृपावधि ॥ १६४६ ॥

पाण्ड्यदेशे प्रशस्तं स्याच्चोलभूपविनाशनम् ।
राज्यस्थानं पञ्चमं स्यात् प्रसुस्थानं चतुष्टयम् ॥ १६४७ ॥

अथवा नवमं चेति योजयेत् कालवित्तमः ।
राज्यस्थानं[6] समारभ्य रन्ध्राधिपतिभुक्तिषु ॥ १६४८ ॥

---

1. डावरम्
2. अष्टाधिपतिदायगे
3. स्य अपुत्रवान्
4. होरे
5. भौमांशगे
6. स्थानमारभ्य

चतुस्त्रिंशाब्दमारभ्य पञ्चत्रिंशतिवत्सरे ।
अगदांशे प्रजातश्च[1] स्वस्थाने बहुभाग्यवान् ॥ १६५९ ॥

केत्वन्तरे शुभं नित्यं क्रूरमासे विनाशुभम् ।
स्वदारवंशाद्भाग्याप्तिं[2] बुधभुक्तौ समादिशेत् ॥ १६६० ॥

शुक्रान्तरे क्रूरमासे मातृपीडां मनोव्यथाम्[3] ।
शुभमासे धनप्राप्तिं[4] सन्तानोत्पत्तिनाशनम् ॥ १६६१ ॥

अगदांशे क्षेमदाये पञ्चत्रिंशतिवत्सरे ।
नागयोगदशामध्ये क्षेमदाये न संशयः ॥ १६६२ ॥

कर्मेशांशे त्रित्रिकोणे स्फुटयोगं गते शनौ ।
श्वशुरस्य मपीडादि तद्वर्गे वा ह्युपद्रवः[5] ॥ १६६३ ॥

विक्रमेशदशान्त्यादौ[6] सुखाधिपतिदायके ।
स्वभुक्तौ श्वशुरादिभ्यो[7] सोदरस्य च ॥ १६६४ ॥

सुखाधिपदशाकाले लाभेशांशत्रिकोणगे ।
स्फुटयोगं गते मन्दे मातुर्मरणमादिशेत् ॥ १६६५ ॥

लाभे स्वन्दे प्रजातस्य षष्ठाधिपतिदायगे ।
क्रूरान्तरे भ्रातृशोकं दशासंधौ च वा यदि ॥ १६६६ ॥

एकोनचत्वारिंशाब्दे [8]वटोश्च मौञ्जिबन्धनम् ।
अगदांशे ततः पश्चात् स्वपुत्रोद्वाहसंभ्रमम् ॥ १६६७ ॥

भत्याद्दाये शुभं नित्यं गेहे गोधान्यमङ्गलम् ।
पुत्रिकोद्वाहसौख्याप्तिं[9] भ्रातृद्वेषं विनिर्दिशेत् ॥ १६६८ ॥

---

1. प्रजातस्य
2. वंशे भाग्याप्तिः
3. मनोव्यथा
4. धनप्राप्तिः
5. उपद्रवः
6. दशान्त्यादि
7. अकस्य जातके
8. मतोपनयनं स्मृतम्
9. सौख्याप्तिः

लाभे जीवे नागयोगे तुलालग्ने[1] च जायते ।
वार्धके पुत्रमूलेन बहुसौख्य[2]युतो भवेत् ॥ १६६९ ॥

उद्वाहानन्तरं भाग्यं यावज्जीवं च सौख्यवान् ।
[3]आयुष्मन्तौ च द्वौ पुत्रौ धनिकः कीर्तिमान् सुखी ॥ १६७० ॥

[4]चन्द्राधिपदशायां तु पापभुक्तिर्यदा भवेत् ।
दशान्ते वा [5]मृतिं दद्यात् कुलीरादित्रिमासके[6] ॥ १६७१ ॥

चतुष्पष्टिसमे मृत्युर्देहान्ते पुण्यलोकवान् ।
अगदांशफलं सत्यं प्रत्यक्षं देवकेरलम् ॥ १६७२ ॥

—: * :—

## तुलालग्ने मोहनांशः.

जन्मलग्नाधिपे शुक्रे दशमे मोहनांशके[7] ।
भाग्याधिपेन संयुक्ते भाग्यवेशो प्रसूतिमान् ॥ १६७३ ॥

सत्त्ववान् सत्यवादी च स्वपिताकृतिदेहवान् ।
याच[8]केषु प्रसन्नात्मा त्यागभोगवदान्यवान् ॥ १६७४ ॥

मोहनांशकगे शुक्रे परदाररतिप्रियः ।
बहुस्त्रीसङ्गवान् कामी वीणागानप्रियः सुखी ॥ १६७५ ॥

वृश्चिकांशे विलग्नेशे पापद्वयसमन्विते ।
मेहप्रकृतिदेहः स्याद्राजसप्रकृतिः सदा ॥ १६७६ ॥

स्वद्रांशे पूर्वभागे लग्नेशे मोहनांशके[9] ।
पश्चाद्भ्रातृविहीनः स्याज्ज्येष्ठभ्रातृसमन्वितः ॥ १६७७ ॥

---

1. लग्नस्य जातके
2. प्रदो
3. पुत्रद्वयं चिरायुष्यं
4. चन्द्रलग्नाधिपदशाकालेद्दरेत् पापोऽपि वा यदि
5. मृता चेति
6. मासगे
7. अंशगे
8. याचकस्य
9. अंशगे

मुद्रांशकगे शुक्रे भगिन्येका चिरायुषी ।
भ्रातृत्रयस्तुपूज्य दत्तपुत्र[1]युता शुभा ॥ १६७८ ॥

मुद्रराशि विष्णुयोगे स्मेशे मोहनांशके[2] ।
विष्णुभक्तिरतो नित्यं मध्वाचारप्रियः सुखी ॥ १६७९ ॥

स्मेशांशपतौ भौमे [3]नवांशेशनिरीक्षिते ।
मेहवातज्व[4]रैणैव देहोपद्रववान् सदा ॥ १६८० ॥

भाग्येशांशपतौ जीवे भाग्यस्थे स्वनवांशके[5] ।
मोहनांशे प्रजातस्य[6] स्वपिता बहुभाग्यवान् ॥ १६८१ ॥

मेलापगांशगे सौम्ये मोहनांशकगे गुरौ ।
मुद्रांशे प्रजातस्य[7] स्वपिता सैनिकेश्वरः ॥ १६८२ ॥

शुक्रे [8]क्षितीश्वरांशस्थे मोहनांशे च नाडिगे ।
तुलांशे प्रजातस्य[9] पिता भूपतिना समः ॥ १५८३ ॥

स्त्रीराज्यकाले बहुभाग्ययोगे
क्षितीश्वरांशे [10]स्वपितुश्च सौख्यम् ।
पितामहस्य प्रबलं करोति
शुक्रांशकाले फलमाहुरार्याः ॥ १६८४ ॥

जन्मलग्नांशगे शुक्रे भाग्येशांशग्रहेक्षिते ।
भूपालस्नेहवान् भोगी [11]चीनाम्बरसुभूषितः ॥ १६८५ ॥

[12]सप्ततारस्थिते शुक्रे दशमे मोहनांशके[13] ।
कामाधिपेन संयुक्ते ज्येष्ठभ्रातृद्वयान्वितः ॥ १६८६ ॥

---

1. पुत्रपतिः
2. अशेष
3. स्वनवांश
4. ज्वरादीनि
5. नवांशगे
6. प्रजातश्च
7. प्रजातश्च
8. क्षितीशसंयुक्ते मोहनांशस्य
9. प्रजातश्च
10. स्वपिता सु
11. चीनाम्बरसुभूषितम्
12. सुदतारस्तगे
13. मोहनांशगे

गर्भश्रीमान् महाभोगी गौरश्यामतनुर्नरः ।
विशालनयनः कान्तः प्रसन्नवदनः सदा ॥ १६८७ ॥

लघ्वाशी धार्मिकः कामी वेश्यास्त्रीसरसः प्रियः ।
नृत्यगीतप्रियो मानी केतुयोगे कुमार्गवान् ॥ १६८८ ॥

वृश्चिकांशकगे शुक्रे कुलीरे केतुसंयुते ।
मोहनांशे प्रजातश्च [1]ह्यन्तःपुरवधूप्रियः ॥ १६८९ ॥

अन्यान्तरे राजपत्नीसुभोगप्रियवान् सुधीः ।
निकृष्टकृत्यनृपतिस्नेहवान् स्यान्न संशयः ॥ १६९० ॥

रत्नलाभेन सन्तुष्टो राजा दास्यति वाहनम् ।
शुक्रषष्ठांशयोगेन नृपतिप्रियमोहवान् ॥ १६९१ ॥

सोदराः पञ्चषट्सङ्ख्याश्चतुःसङ्ख्या[2]श्चिरायुषाः ।
लाभाधि[3]पेशुरांशस्थे लग्नेशे मोहनांशके[4] ॥ १६९२ ॥

ज्येष्ठभ्रता प्रसिद्धश्च बहुसेनाश्वनायकः ।
लोभप्रकृतिमान् रागी युद्धे वायुघगण्डवान् ॥ १६९३ ॥

सर्व[5]भ्रातृणां प्रथमः स्वपित्रधिककीर्तिमान् ।
बहुयोग [6]इति ख्यातः कलत्रद्वयवान् सुखी ॥ १६९४ ॥

मोहनांशकगे शुक्रे तुलाल[7]ग्नोद्भवस्य च ।
[8]सोदरेषु द्वितीयश्च कलत्रद्वयवान् सुखी ॥ १६९५ ॥

शुक्रे केतु[9]समायुक्ते जातस्य मोहनांशके ।
सहोदरभ्रातृपत्नी [10]सुस्त्रियैकान्यकामिनी ॥ १६९६ ॥

---

1. अन्तः
2. चिरायुषम्
3. लाभाधिप
4. अंशगे
5. ज्येष्ठभ्रातृयोगं स्वपिता
6. योगमिति ख्यातं
7. लग्नस्य जातके
8. सर्वज्येष्ठानुजभ्राता
9. युते जातो मोहनांशस्य जातके
10. कथ ते कन्यकामिनी

सर्वज्येष्ठानुजभ्रातृभार्या गर्भप्रपीडिता ।
कालान्तरे मृतिं चैति सन्तानोत्पत्तितः परम् ॥ १६९७ ॥

[1]पितृव्यैकोऽचिरायुष्मान् कलत्रत्रयवान् सुखी ।
[2]सर्पहिंसादिदोषेण मृतपुत्रबहुत्ववान् ॥ १६९८ ॥

विक्रमाधिपतौ जीवे क्षेमांशे भाग्यराशिगे ।
वार्धके स्वपितृव्यश्च[3] पुत्रवांश्चैव संशयः ॥ १६९९ ॥

सप्तमाधिपतौ भौमे मोहनांश[4]समुद्भवः ।
बाल्ये [5]विवाहं लभते रक्तवर्णकलत्रवान् ॥ १७०० ॥

दारेशाक्रान्तभवने दारेशस्य नवांशके[6] ।
स्वदारजन्म[7]लग्नं च योजयेत् कालवित्तमः ॥ १७०१ ॥

मनुपष्ठ्यंशगे भौमे तुलाल[8]मोद्भवस्य च ।
स्वदारोद्वाहतः पूर्वं श्वशुरारिष्टमादिशेत् ॥ १७०२ ॥

यमषष्ठ्यंशगे मन्दे शोभनांशे[9] च नाडिगे ।
उद्वाहानन्तरं भाग्यं बहुभाग्यवती [10]शुभा ॥ १७०३ ॥

स्वदार[11]सोदरभ्राता [12]त्वेकः स्याद्‌ वा न च ।
मनुषष्ठ्यंशदोषेण स्वदारभ्रातृशोकवान् ॥ १७०४ ॥

मोहनांशे विलग्नेशे दारेशे शोभनांशके ।
भार्या गुणवती पूता[13]त्वेकभ्रातृसमन्विता ॥ १७०५ ॥

कालान्तरे पुत्रवती भर्तृप्रियकरी शुभा ।
[14]शुक्रांशसंस्थिते मन्दे स्वर्भानुकुजवीक्षिते ॥ १७०६ ॥

---

1. पितृव्येकचिरायुष्यं
2. पुरा वा पापस्य दोषो
3. पितृव्यस्य
4. अंशस्य जातके
5. उद्वाहयोग स्यात्
6. नवांशगे
7. भवने
8. लग्नस्य जातके
9. अंशस्य
10. सुखी
11. सम्भव
12. सोदर एको वा नास्तिमेव च
13. एकभ्रातृ
14. शुक्रांशकालगे

किंचिद्रोगवती भार्या गर्भस्रावेण कर्शिता ।
तस्य दोषोपशान्त्यर्थं सेतुस्नानं समाचरेत् ॥ १७०७ ॥

पश्चात् [1]सजीवसन्ताने गर्भस्रावो न विद्यते ।
दारारूढपतौ जीवे दारेशे शोभनांशगे ॥ १७०८ ॥

पापदृष्टिविहीने[2] च तस्य भार्या पतिव्रता ।
दारारूढपतौ जीवे मोहनांशगते भृगौ ॥ १७०९ ॥

दारद्वये सुपुत्राप्तिः स्वपिता [3]स्वैकभार्यवान् ।
सोदरौ द्वौ द्विभार्यौ[4] च भगिन्येका [5]स्वपुत्रिणी ॥ १७१० ॥

दत्तपुत्रवती चैव माता कश्चित्त्रिभार्यकः[6] ।
पितृव्यश्च[7] तथा विन्द्याद्वार्धके पुत्रयोगवान् ॥ १७११ ॥

पितामहप्रसिद्धश्च राजद्वारे सुपूजितः ।
पुत्रपौत्रैः परि[8]वृतो वार्धके पुत्रशोकवान् ॥ १७१२ ॥

पितामहफलं सर्वं [9]जातस्य मोहनांशके ।
नवमाब्दे [10]पित्ररिष्टं कर्माधिपतिभुक्तिषु ॥ १७१३ ॥

धनाधिपान्तरे चापि स्वमातानुगमिष्यति ।

पितामहभ्रातृसुतामयादि
क्लेशं [11]च दुःखं सपितामहस्य[12] ।
सपुत्रशोकं मुनयो वदन्ति
सम्पद्दशादौ महदुःखभाक् स्यात् ॥ १७१४ ॥

सम्पत्ताराधिपे जीवे दशाकालेऽष्टमे स्थिते ।
तद्दशायां मनस्तापं शुभाशुभफलं स्मृतम् ॥ १७१५ ॥

---

1. सन्तानमायुष्यं गर्भस्रावः
2. हीनश्च
3. एक
4. भार्या च
5. काच
6. भार्यवान्
7. पितृव्यस्य
8. वृतैर्वा
9. मोहनांशस्य जातके
10. पिता
11. दर्शयेत्
12. महश्च

षड्ज्ञातिविनाशेन क्लेशं प्राप्नोति भूरिशः ।
षष्ठाधिपदशाकाले राज[1]विग्रहमादिशेत् ॥ १७१६ ॥

स्वज्येष्ठभ्रातृसन्तापं दशारम्भे सुभाग्यवान् ।
पश्चात् क्लेश[2]मुपैतीति मङ्गयोग[3]युतः सुखी ॥ १७१७ ॥

षष्ठेशांशे त्रिकोणे स्फुटयोगं गते शनौ ।
षष्ठेशदृष्टिराशौ [illegible] सोदरस्य मनोव्यथा ॥ १७१८ ॥

योगावयोगवांश्चेति तत्काले फलं भवेत् ।
षष्ठेशाक्रान्तभवने स्फुटयोगं गते भृगौ ॥ १७१९ ॥

षष्ठाधिपदशाकाले स्थाननाशं विनिर्दिशेत् ।
ज्वरोपद्रवपीडादिं स्वदेहायासमेव च ॥ १७२० ॥

भ्रातृक्लेपकलापं [4]च दारपीडां क्वचित् क्वचित् ।
गोचरे पञ्चमे मन्दे षष्ठाधिपतिदायके[5] ॥ १७२१ ॥

इदमेव फलं सत्यं चतुर्थे व्याकुलं महत् ।
त्रिकोणे कविचेदिति कुलीरांशे शुभाधिकम् ॥ १७२२ ॥

महाराजप्रसादेन लभते धनसम्पदः ।
शुक्रे भौमांशयोगेन भाग्येशांशेऽपि दायके[6] ॥ १७२३ ॥

शुक्रभुक्तौ त्रिधा [7]शुक्रो धन्ते स्थानच्युतिर्भवेत् ।
विंशाब्दे [8]शुभहक्लेशं गोचरे द्वादशे गुरौ ॥ १७२४ ॥

एकोनविंशद्वर्षान्ते साध[9]नान्ते विनिर्दिशेत् ।
षष्ठाधिपदशाकाले गोचरे त्रिवुके शनौ ॥ १७२५ ॥

---

1. विड्र
2. भ्रदं चेति
3. मदः
4. स्वा दारपीडा
5. दायगे
6. दायगे
7. वातिरन्ते
8. मद्वित
9. सधनाशे

राज्यान्तरं प्रकुर्वीत राजपत्नी मरिष्यति ।
स्वसप्तमे विपद्वाये लाभे ॥ गोचरे शनौ ॥ १७२६ ॥

सहोदरभ्रातृशोकं जीविते प्रभुनाशनम् ।
तुलाशनौ भाग्यवृद्धि[1] स्वस्थाने राजदर्शनम् ॥ १८२७ ॥

स्वज्येष्ठभ्रातृयोगेन नित्यश्रीसौख्यमादिशेत् ।
कन्याशनिस्थिते काले ऋणप्राप्तिं[2] मनोव्यथाम् ॥ १७२८ ॥

ग्रामान्तरे निवासं [3]च पश्चात् [4]स्वस्थानमादिशेत् ।
षष्ठाधिपदशाकाले गोचरे पञ्चमे भृगौ ॥ १७२९ ॥

राहुभुक्तौ धनप्राप्तिं[5] स्वल्पलाभं विनिर्दिशेत् ।
दशाधिपेऽष्टमे [6]राहौ लग्नाद्व्ययगते[7] यदि ॥ १७३० ॥

पितृव्यदेहजाड्यादिस्वदेहायासमादिशेत ।
बन्धुवर्गे शुभं चेति ज्ञातिवर्गे सुतोत्सवम् ॥ १७३१ ॥

राहुभुक्तौ क्रूरमासे ज्वरपीडां विनिर्दिशेत् ।
सप्तमाधिपे जीवे दशायां राहुभुक्तिषु ॥ १७३२ ॥

मोहनांशे प्रजातस्य शुभाशुभफलं समम् ।
विक्रमेशदशाकाले मन्दांशमङ्भुक्तिषु ॥ १७३३ ॥

अतीव क्लेशकाल. स्याद्भ्रातृपत्नीमपी[8]ड्विता ।
भाग्ये जीवे तुलाख्ये दशायां राहुभुक्तिषु ॥ १७३४ ॥

दशान्ते सोदरभ्रातृसन्तानोत्पत्तिमादिशेत् ।
पितृव्यस्य तथा विन्द्याद्गर्भाधानमथापि च ॥ १७३५ ॥

---

1. वृद्धिः
2. प्राप्तिर्मनोव्यथा
3. स्वग्रा
4. स्वस्थं विनिर्दिशेत्
5. प्राप्तिस्त्व
6. राहुर्लग्ना
7. गतो
8. पीडता

पुण्यतीर्थफलप्राप्तिर्भ्रातृवर्गे विशेषतः ।
कुटिलावस्थगे मन्दे तुलांशे कुजवीक्षिते ॥ १७३६ ॥
अन्तःक्रोधी प्रसन्नात्मा ज्ञातिबन्धुविरोधवान् ।
दिते मन्दे तुलाख्ये वृश्चिकांश[1]समुद्भवः ॥ १७३७ ॥
कुत्सितप्रियवान् रागी कुमार्गप्रमुसेवकः ।
स्व[2]राज्यनृपतिक्रोधी पापी दुर्मार्ग[3]मान रः ॥ १७३८ ॥
मेहरोगी क्रूरश्चैव जीवहिंसाप्रदो भवेत् ।
स्वप्नमेष्य [4]गुणो वाच्यः कुटिलावस्थगे शनौ ॥ १७३९ ॥
कुलभ्रंशादिदोषेण भ्रातृभार्यासुतामयम् ।
मन्दे कुलमदृष्टांशे श्वापद्वयनिरीक्षिते ॥ १७४० ॥
स्वसोदरपितृव्यादि[5]सन्तानारिष्टमादिशेत् ।
स्वदशायां फलं चिन्त्यं ज्ञातिवर्गे शिशुक्षयम् ॥ १७४१ ॥
दारान्तरं [6]च लभते जातकस्य शुभं वदेत् ।
द्युरांशनाडिगे सूर्ये बुधे मेषापगाशगे ॥ १७४२ ॥
विष्णुयोगे प्रजातस्य पञ्चविंशात् परं सुखम् ।
कर्मेशांशपदोषेण [7]मोहनांशोद्भवस्य च ॥ १७४३ ॥
विंशोऽब्दे स्थाननाशादिक्लेशं स्यादृतुवत्सरे ।
घने मन्देऽष्टमे भौमे पद्माधिपतिदायके ॥ १७४४ ॥
केकयोगफलं चेति महदैश्वर्यखण्डितम् ।
भाग्येशांशपयोगेन पञ्चविंशतिवत्सरे ॥ १७४५ ॥
एकोनविंशतौ[8] चैव राजप्रीतिधनागमम् ।
स्वज्येष्ठभ्रातृयोगेन स्वस्थानप्राप्तिमादिशेत् ॥ १७४६ ॥

---

1. अंशस्य जातके
2. स्वस्त्रैव
3. चेतस.
4. गुणं सत्यं
5. पितृव्यादि
6. प्रकुर्वीत
7. मोहनांशस्य जातके
8. विंशतिश्चैव

स्वराजदर्शने चेति नित्यं सन्तोषमादिशेत् ।
सुखेशांशे त्रिकोणे स्फुटयोगं गते शनौ ॥ १७४७ ॥

तुलालग्ने प्रजातस्य[1] पुत्रलाभं विनिर्दिशेत् ।
सुताधिपदशान्त्ये[2] च आरम्भे षष्ठपस्य च ॥ १७४८ ॥

भाग्येशांशपयोगेन पुण्यतीर्थे[3] सुतोत्सवम् ।
जीवे राह्वन्तरे काले मन्दे मन्दान्तरे[4]ऽपि च ॥ १७४९ ॥

सेतुस्नानफलप्राप्तिं[5] पुत्रलाभं विनिर्दिशेत् ।
तुला[6]लग्ने स्थिते जातो गोचरे स्वोच्चगे शनौ ॥ १७५० ॥

याम्यायने मोहनांशे गर्भाधाने [7]च स्वस्त्रियाम् ।
पितृव्यस्य सुतप्राप्तिर्दशान्ते सोदरस्य च ॥ १७५१ ॥

सन्तानोत्पत्तिमित्याहुर्मोहनारिष्टभं क्वचित् ।
मेलापकांशगे सौम्ये दशमे रविसंयुते ॥ १७५२ ॥

तुलालग्ने प्रजातस्य ज्येष्ठभार्या सुपुत्रिणी ।
भाग्ये जीवे सुते चन्द्रे पुत्र[8]युक्तो न संशयः ॥ १७५३ ॥

ज्येष्ठभार्या त्रिसन्ता[9]ना शोकेनार्तं गमिष्यति ।
मन्दे कुलापदंशे दशायां शुक्रभुक्तिषु ॥ १७५४ ॥

तुलांशे प्रजातस्य ज्येष्ठभार्या मृतिं वदेत् ।
बुधान्तरेऽपमृत्युश्च सूतिकावायुपीडिता[10] ॥ १७५५ ॥

अभिमा[11]न्यभयप्राप्तिः शान्त्या शान्तिं प्रयास्यति ।
घने मन्दे सुते शुक्रे मकरांशेऽर्क[12]संयुते ॥ १७५६ ॥

---

1. प्रजातस्य
2. आरम्भे षष्ठाधिपदशान्तगे
3. तीर्थे
4. दान्तरे तु च
5. प्राप्तिः
6. चरस्थिते काले
7. च दारगे
8. पुत्रवान्भवेत्
9. सन्तानभेको नाशप्रदो भवेत्
10. पीडित.
11. अभिमान्य
12. नीचिते

दारेशाभावदोषेण ज्येष्ठभार्या [1]विनश्यति ।
तद्दोषपरिहारार्थं ग्रहचक्रं प्रपूजयेत् ॥ १७५७ ॥

दैव[2]ज्ञाय प्रदानेन दारारिष्टं [3]न विद्यते ।
शोभनांशकगे भौमे तुलल[4]ग्नोद्भवस्य च ॥ १७५८ ॥

[5]आयुष्मती कलत्रे द्वे दारान्वयसुखं महत् ।
दारद्वये सुतप्राप्तिः सप्तस्थानयोगवान् ॥ १७५९ ॥

[6]चिरायुषास्तेषु पञ्चपुत्रीपुत्रसमन्वितः ।
सुताधिपदशाकाले [7]त्विदमेव फलं स्मृतम् ॥ १७६० ॥

राजयोगं [8]च लभते भ्रातृभाग्य[9]युतः सुखी ।
कर्मेशस्यांशगे मन्दे दशायां च स्वभुक्तिषु ॥ १७६१ ॥

राजयोगं [10]च लभते स्वस्थाने बहुभाग्यवान् ।
लाभेशो पञ्चमां[11]शस्थे भुक्तिकाले महत् सुखम् ॥ १७६२ ॥

बहुरत्नसुवाहाप्ति[12] पुत्रलाभं सु शोभनम् ।
भाग्येशनाडियोगेन कर्मेशांशदशा शुभा[13] ।
अनेकधर्मसिद्धिः स्याज्जीर्णोद्धारण[14]संयुता ॥ १७६३ ॥

विष्णुयोगे तुलारम्भे बुधे मेषापगांशके ।
सुताधिपदशाकाले बहुधर्म[15]करः सुखी ॥ १७६४ ॥

कर्मे सुरांशके[16] सूर्ये बुधे मेषापगांशगे ।
उत्कृष्टधर्मवान् कामी [17]स्थापको ग्रामदारस्य ॥ १७६५ ॥

---

1. विनाशनम्
2. दैवज्ञस्य
3. निवारणम्
4. लग्नस्य आरभ्य
5. कलत्रद्वयमायुष्यं
6. पञ्चसङ्ख्यापि रायुष्यं
7. इदमेव
8. प्रकुर्वीत
9. भाग्यप्रद
10. प्रकुर्वीत
11. पञ्चमांशेष
12. सुवाहाप्तिः
13. शुभम्
14. आदिशेत्
15. धर्मप्रद
16. सुरांशगे
17. ग्रामद्वारप्रतिष्ठावान्

सर्वनाडीफलं [1]चैव गोचरेण प्रदृश्यते ।
तत्सद्भावार्थरन्ध्रेशकामेशपतिदायगे ॥ १७७७ ॥

स्फुटयोगांशगे मन्दे चेधकप्रदभुक्तिषु ।
स्मात् स[2]समगे मन्दे स्वर्भानुकुजवीक्षिते ॥ १७७८ ॥

किंचिद्रोगवती भार्या [3]दुःस्वप्नादिपीडिता ।
तदभावे मोहनाशे प्रतिबन्धप्रपीडिता[4] ॥ १७७९ ॥

कालान्तरे सुतप्राप्तिर्दारान्तरमहासुखम् ।
कलांशाधिपतौ जीवे भाग्ये पूर्णबलान्विते ॥ १७८० ॥

विष्णुयोगे प्रजातश्च विपद्दाये श्रिया [5]युतः ।
पितृयोगप्रभावेण [6]ह्याजन्माद्यन्तभोगवान् ॥ १७८१ ॥

भ्रातृभाग्यार्जितार्थादि[7]लाभो भवति नित्यशः ।
कलांशेशदशाकाले [8]स्वल्पलाभं शुभाशुभम् ॥ १७८२ ॥

जन्मदाये महासौख्यं विपद्दाये विशेषतः ।
चन्द्रचेष्टाकेन्द्रयोगे मन्दे पूर्णबलान्विते ॥ १७८३ ॥

तद्दशायां महाभाग्यं विष्णुयोगे स्वभुक्तिषु ।
विष्णुयोगे मोहनाशे राजस्त्रीप्रसादवान् ॥ १७८४ ॥

राजान्तरवशाद्भाग्यं विपद्दाये श्रिया[9]युतम् ।
मन्दान्तरे क्रूरमासे दारपीडा क्वचिद्व्यथा ॥ १७८५ ॥

स्वदारवंशे सन्तापं [10]स्यालकस्य सुखोत्सवम् ।
शुभमासे फलं चेति प्रयासं क्रूरमासगे ॥ १७८६ ॥

---

1. चेति
2. समांशगे
3. दुःस्वप्नग्रहपीडिता
4. पीडितः
5. श्रियसहन्
6. जन्माद्यायुष्यभोगवान्
7. अर्थादिलाभो
8. अल्पलाभं
9. श्रियासहम्
10. शालकस्य

पुण्यतीर्थाटने सौख्यमल्पलाभं सुशोभनम् ।
विपद्दाये मोहनांशे स्वभुक्तौ क्षामजं[1] भयम् ॥ १७८७ ॥

स्वगोत्रदायादिकलत्रपीडा-
नाशश्चदेद्व्ययगतेऽर्किदाये ।
सहोदरभ्रातृविभागमेति
राजान्त[2]रात् सौख्यसुभूषणा[3]प्तिम् ॥ १७८८ ॥

कीटे कुम्भांशगे मन्दे दशायां क्रूरभुक्तिषु ।
क्रूरमासे ज्वरं तापमथवा [4]राजविग्रहम् ॥ १७८९ ॥

स्वराजसहितश्चैव तीर्थ[5]क्षेत्राटनं चरेत् ।
ज्ञातिवर्गे विषमयं राजचोराग्निजं भयम् ॥ १७९० ॥

केतुभुक्तौ फलप्राप्तिः शुक्रभुक्तौ शुभाशुभम् ।
राजद्वारजनद्वेषं भुक्त्यन्ते व्याकुलं महत् ॥ १७९१ ॥

सूर्यान्तरे व्याकुलं स्या दायादधिकव्ययम् ।
शुक्रभुक्त्यन्त्यमारभ्य मन्दे सूर्यान्तरान्तरे ॥ १७९२ ॥

[6]गुदनेत्रोदरव्याधिकृमिपीडां[7] विनिर्दिशेत् ।
मन्दे शुक्रान्तरे काले स्वगेहे शुभशोभनम् ॥ १७९३ ॥

पश्चाद्व्याकुलकार्याणि क्रूरमासे विनिर्दिशेत् ।
सूर्यान्तरे राजकार्ये स्वपभोश्च महाविपत् ॥ १७९४ ॥

चन्द्रान्तरे जातकस्य [8]व्याप्यरोगं विनिर्दिशेत् ।
सपुत्रोद्वाहसौख्याप्तिं[9] कुजभुक्तौ शुभाधिकम् ॥ १७९५ ॥

प्रबलोद्योगलाभादिं [10]शत्रुनाशं विनिर्दिशेत् ।
चन्द्रान्तरे सुखं किंचित् सर्वथा मनसि [11]व्यथाम् ॥ १७९६ ॥

---

1. क्षाम्वरम्   2. राजान्तरे
3. भूषणाप्तिः   4. राजविद्रुरम्
5. यात्राफलं   6. गुदाक्षिगुदरव्याधि
7. पीडा   8. योगरोगं
9. सौख्याप्तिः   10. लाभादि   11. मनसिव्यथा

कुजान्तरे शुभं चेति भुक्त्यन्ते व्याकुलं महत् ।
मन्दे चन्द्रान्तरे काले स्वप्रमोक्ष महाविपत् ॥ १७९७ ॥

अमात्यजनसन्तापे स्वराजन्यजनावधि ।
राहुभुक्तौ बन्धुनाशं कुजभुक्तौ शुभक्षयम् ॥ १७९८ ॥

राजचोरकलापेन व्याकुलान्तरं शुभम् ।
मन्दे राह्वन्तरे काले क्रूरांशे गोचरे शनौ ॥ १७९९ ॥

मोहनांशे क्रूरमासे स्वजनारिष्टमादिशेत् ।
पितृव्यस्य मनस्तापे स्वगोत्रज्ञातिनाशनम् ॥ १८०० ॥

जातकस्य शुभंकिन्त्वाद्गुरुभुक्तौ शुभाशुभम् ।
तस्मात् कर्मायजामित्रभाग्याधिपतिभुक्तिषु ॥ १८०१ ॥

सुतेशस्य दशाकाले स्वगेहे शुभशोभनम् ।
[1]चन्द्रभुक्तौ दशान्त्ये वा निधनेशान्तरेऽथ वा ॥ १८०२ ॥

दारपीडा मनस्तापं सोदरादिमनोव्य[2]थाम् ।
शुभस्यानन्तरं दुःखं दुःखस्यानन्तरं शुभम् ॥ १८०३ ॥

गुरुभुक्तौ फलं चेति [3]कुम्भराश्युद्भवस्य च ।
कुम्भे मन्दांशगे चन्द्रे मन्दे [4]जीवांशके तथा ॥ १८०४ ॥

अशुभं तद्दशायां तु शुभं चेति कचित् कचित् ।
कुम्भे वर्गोत्तमे चन्द्रे दशाया गुरुभुक्तिषु ॥ १८०५ ॥

देहारोग्यं प्रकुर्वीत योगभङ्गो[5] न विद्यते ।
कुम्भत्रिकोणजातस्य चन्द्रचेष्टाफलं समम् ॥ १८०६ ॥

मन्ददाये शुभं चैव [6]तुलास्थे प्रजायते ।
विपत्तारदशान्त्ये च सोदरभ्रातृशोकवान् ॥ १८०७ ॥

---

1. चन्द्रांशे च
2. मनोव्यथा
3. कुम्भचन्द्रस्य जातके
4. जीवान्तरान्तरे
5. योगभङ्ग
6. मिथुने समजातके

तुलालग्ने चन्द्रदाये षष्ठेशांशत्रिकोणगे ।
स्फुटयोगं गते मन्दे भ्रातृशोकं विनिर्दिशेत् ॥ १८०८ ॥

तुलालग्ने दारहानिर्दशान्ते व्याकुलं महत् ।
सौम्यदायेऽपमृत्युश्च तुलालग्ने न विद्यते ॥ १८०९ ॥

मेलापगांशगे सौम्ये कुम्भे चन्द्रे घटांशगे ।
क्षेमदाये महाभाग्यं स्वभुक्तौ राज[1]विग्रहम् ॥ १८१० ॥

चन्द्रलग्नाष्टमाधीशदशायां च स्वभुक्तिषु ।
क्रूरमासे मनस्तापं स्वजनारिष्टमादिशेत् ॥ १८११ ॥

लाभेशस्य नवांशे[2]शदशायां धनलाभदा[3] ।
राजयोग[4] विभूषाप्ति पुत्रलाभं सुशोभनम् ॥ १८१२ ॥

बाधके श्रीशुभाप्त्याप्ति[5] भाग्येशस्य [6]दशाशुभा ।
पुत्रिकोद्वाहसि[7]द्धिं च पौत्रलाभं विनिर्दिशेत् ॥ १८१३ ॥

भाग्ये जीवे प्रजातस्य भाग्याधिपतिदायगे ।
राजामात्यप्रसादेन धनलाभं विनिर्दिशेत् ॥ १८१४ ॥

कुम्भे कुम्भांशगे चन्द्रे तुला[8]लग्ने प्रजायते ।
क्षेमदाये शुभं चेति [9]स्वपुत्रस्य सुतोद्भवम् ॥ १८१५ ॥

व्ययाधिपदशाकाले स्वजन्मर्क्षेशभुक्तिषु ।
व्ययाधिपान्तरे वापि पुत्रनाशं विनिर्दिशेत् ॥ १८१६ ॥

क्षेमताराधिपे सौम्ये दशायां शुक्रभुक्तिषु ।
तुलालग्ने प्रजातस्य पुत्रिकाशोकमादिशेत् ॥ १८१७ ॥

षष्ठाधिपदशाकाले [10]चन्द्रजेऽस्य भुक्तिषु ।
षष्ठाधिपान्तरे वापि शत्रुभयमनाशनम् ॥ १८१८ ॥

---

1. निग्रहम्
2. नवांशे च
3. लाभदम्
4. राजयोगविभूषणे
5. भाग्यातिर्भाग्ये
6. [illegible]
7. सिद्धिः स्यात्
8. [illegible]
9. सुपुत्रस्य
10. [illegible]

भाग्याधिपदशाकाले सुखेशांशत्रिकोणगे ।
स्फुटयोगं गते मन्दे राज्याधिपतिनाशनम् ॥ १८१९ ॥

कर्माधि[1]पदशायां तु व्ययाधिपतिभुक्तिषु ।
स्वप्र[2]मुष्य महारोगमपमृत्युं तथाश्रितः ॥ १८२० ॥

भाग्याधिपे कर्मगते बलाढ्ये
दशाविपाके लभतेऽर्थभूमीः ।
स्वपुत्रभाग्यं मुनयो वदन्ति
राजान्तरे भाग्यसुभूषणा[3]सिम् ॥ १८२१ ॥

व्ययाधिपदशाकाले षेधकग्रहभुक्तिषु ।
राजा राष्ट्रकलापेन देशान्तरनिवासवान् ॥ १८२२ ॥

पश्चात् स्व[4]स्थानमाप्नोति शुभग्रहदशान्तरे ।
धनलाभं [5]च लभते स्वराज्यमीतिमादिशेत् ॥ १८२३ ॥

शोभनांशकगे भौमे बुधे मेलापगांशगे ।
मोहनांशकगे शुक्रे त्रिग्रहांशफलं स्मृतम् ॥ १८२४ ॥

षद्‌लग्नाष्टमाधीशदशायां शनिभुक्तिषु ।
मेलापगांशे जातस्य कालमृत्युं विनिर्दिशेत् ॥ १८२५ ॥

शोभनांशकगे भौमे पञ्चचत्वारिवत्सरे ।
अपमृत्युभयमाधिः शान्त्या शान्ति मयास्यति ॥ १८२६ ॥

मोहनांशकगे शुक्रे [6]द्वेकपञ्चाशवत्सरे ।
षट्पञ्चाशेऽपमृत्युश्च समानजनशोकवान् ॥ १८२७ ॥

तदर्धे मातृशोकः[7] स्याद्‌द्वात्रिंशब्देऽथ वा यदि ।
मन्ददाये चापशनी कीटान्ते वा मनोव्यथा ॥ १८२८ ॥

---

1. कर्माधिपान्तरे वापि
2. स्वप्रमोथ महारोगमपमृत्युस्तथा
3. भूनणासिः
4. स्वर्णफलं चेति
5. प्रभुत्वं
6. एक
7. मातृशोकं

एकषष्टिसमे मृत्युः [1]मासेषु कुम्भादिषु त्रिषु ।
त्रिमहांशफलं [2]योज्यं प्रत्यक्षं देवकेरलम् ॥ १८२९ ॥

पितृदेहमपत्याधिस्थमात्रस्थितः[3] परम् ।
त्रैलोवर्यांशे फलं चेति दशासन्धौ पितुर्विपत् ॥ १८३० ॥

[4]पुत्रेशस्य दशाकाले सन्तानोत्पत्तिभाग्यवान् ।
पुत्रनाशं [5]च लभते ज्ञातिद्वेषकलापवान् ॥ १८३१ ॥

सिंहे शनिस्थिते काले महच्छिद्रं शुभाशुभम् ।
विवाहो[6] सोदरभ्रातुः पितृ[7]व्येन सुवैरवान् ॥ १८३२ ॥

विपत्ताराधि[8]पकेतुदशायां भाग्यमश्नुते ।
ज्ञातिद्वेषकलापेन पृथग्व्यापारमाविशेत् ॥ १८३३ ॥

कन्याशनिस्थिते काले नवमे राहु[9]संस्थिते ।
अतीव क्लेशकार्याणि ज्ञाति[10]मूलेन दुःखितः ॥ १८३४ ॥

केतोर्द[11]शायां स्वभुक्तौ स्वबन्धुमरणं [12]भवेत् ।
रोगाधिपदशाकाले स्वभुक्तौ व्याकुलं महत् ॥ १८३५ ॥

मध्यखण्डे [13]च दुःखं स्यात् सहोदरसुतामयः ।
शुक्रांशभावनाडीषु त्रैलोवर्यांश[14] दशाफलम् ॥ १८३६ ॥

[15]प्रोक्तं वै सत् स विस्तारं योजयेत्कालवित्तमः ।

—:•:—

---

1. कुम्भादिसप्तमासके 2. शस्ये
3. मासादिस्थलपरम् 4. पुत्रमहद्दशान्तके
5. प्रवृत्तीन 6. विवाह
7. पितृव्यस्य 8. विपत्ताराधिपे
9. राहुस्थलगे 10. मूलादिकारणात्
11. केतोर्दशायां वा 12. पितुः
13. विचार 14. त्रैवर्गांशे
15. विस्तारमिति चान्येषु योजयेत् कालवित्तमः ।

## मकरलग्ने गोप्रियांशः ।

गोप्रियांशे [1]झषांशे च मृगलग्नसमुद्भवः ॥ १८३७ ॥
रक्तवर्णतनुः प्राज्ञो भोगी वर्गोत्तमे सुखी ।
मीने मीनांशगे मन्दे [2]मृगलग्नसमुद्भवः ॥ १८३८ ॥

एकभ्रातृयुतः श्रीमान् सहोदरी[3] बहुत्ववान् ।
मेषांशे मिथुने [4]राहौ भृगुतेन समन्विते ॥ १८३९ ॥

मीने मन्दे प्रजातश्च भाग्यवानेक भ्रातृमान् ।
सम्पद्दाये द्वादशांशे सोदरोत्पत्ति[5]मान् भवेत् ॥ १८४० ॥

तत्पूर्वे सोदरभ्रातृनाश[6]श्चैव भविष्यति ।
वर्गोत्तमे चित्रभेशे तृतीये पापवर्जिते ॥ १८४१ ॥

एकभ्रातृप्रियो नित्यं बहुवित्ताम्बरः सुखी ।
वाणिज्यांशस्थगे मन्दे मीने वर्गोत्तमांशगे ॥ १८४२ ॥

गोप्रियांशे प्रजातस्य बहुव्यापारजीवनम् ।
गोप्रियांशगते मन्दे गणेशांशकगे गुरौ ॥ १८४३ ॥

सम्पद्दाये राहुयुक्ते सोदरोत्पत्ति[7]मान् भवेत् ।
सोदरारिष्टदोषार्थं पूर्वो[8]क्तशान्तिमादिशेत् ॥ १८४४ ॥

तस्य भ्रातृफलं वक्ष्ये ज्येष्ठभ्रातृप्रियः सुखी ।
भगिनीत्रयवान् रागी [9]अथवा भेदसङ्ख्यकाः ॥ १८४५ ॥

रवि[10]लधिकधर्मात्मा रविशिष्टभद्गुरयवान् ।
पितृमातृपरतो नित्यं देवब्राह्मणपोषकः ॥ १८४६ ॥

---

1. झषे लग्ने मकरे लग्नजातकं
2. मकरे लग्नजातके
3. सहोदरबहुत्ववान्
4. राहु
5. भ्रातृमान्
6. नाश...मिति स्मृतम्
7. भ्रातृमान्
8. पूर्वोक्ते
9. अथवा च चतुष्टये
10. पिताधिक

मातृविश्वासवान् रागी राजद्वारे सुपूजितः ।
एकदाररतो नित्यं हरिशङ्करभक्तिमान् ॥ १८४७ ॥
पि[1]तृपुण्यप्रभावेण यौवने बहुभाग्यवान् ।
बहुपुत्रार्थसम्पन्नो भगिनीभ्रातृपोषकः ॥ १८४८ ॥
ज्येष्ठभ्रातृसुतद्वेषी ज्ञातिवर्गे प्रसिद्धिमान् ।
एवंभूतः स्वभ्राता च दीर्घायुरतिधार्मिकः ॥ १८४९ ॥
लग्नारूढपतौ शुक्रे दशायामुत्तरार्धके ।
अतीव क्लेशमाप्नोति गोपियांश[2]समुद्भवः ॥ १८५० ॥
प्रमोदांशे सुताधीशे लग्नेशे गोपियांशगे ।
पितामहः प्रसिद्धश्च मध्ये भाग्यसमृद्धिमान् ॥ १८५१ ॥
बहुभ्रातृसुतस्त्यागी वैदिकब्राह्मणप्रियः ।
स्वकुलाचारधर्मज्ञः स्वगोत्रज्ञातिपोषकः ॥ १८५२ ॥
बन्धुवर्गे सुपूज्यश्च स्वपितामहपुण्यवान् ।
[3]भाग्याधिपे गुरोरंशे प्रमोदांशे सुताधिपे ॥ १८५३ ॥
लग्नेशे गोपियां[4]शस्थे भोगी जन्मत्रयं[5]सुखी ।
पितामहसुखोत्कर्षिः पश्चादुत्तमजन्मवान् ॥ १८५४ ॥
स्वपिता नृपतिश्चैव पश्चाज्ज[6]न्मनि धार्मिकः ।
[7]जन्मन्यस्मिन् गोपियांशे स्वपिता पूजकालये[8] ॥ १८५५ ॥
चित्तविक्षेपवैरेण पश्चाद्भूपतिजन्मवान् ।
वीरस्वर्गफलप्राप्तिः पश्चा[9]द्राजन्यजन्मनि ॥ १८५६ ॥
नीचांशगे सुताधीशे स्वक्षेत्रे रविसंयुते ।
लग्नेशे गोपियांशस्थे पश्चाच्छूद्रकुलोद्भवः ॥ १८५७ ॥

---

1. पिता पुण्य
2. अंशस्य जातके
3. भाग्येऽधिपे गुरुरांशे
4. अंशस्य भोगी
5. जन्मत्रये
6. जन्मे सु
7. हृ ज्मने
8. जन्मगे
9. जन्मनिधारणम्

सुतेशांशफलं सत्यं योजयेत् कालवित्तम: ।
गोप्रियांशे विरभेशे चन्द्रे पापांशनाडिगे ॥ १८५८ ॥

संपद्वाये विवाहं[1] च राहुसुक्रयन्त्यमादिशेत् ।
मीने वर्गोत्तमे मन्दे [2]तुलालग्नसमुद्भवः ॥ १८५९ ॥

संपद्वाये सिंहशनौ मीनमासे विवाहवान् ।
शनि[3]वक्रं गते काले मीनान्ते मेषगे गुरौ ॥ १८६० ॥

संपद्वाये विवा[4]हश्च मासु मीनादिषु त्रिषु ।
षष्ठे पापद्वये जातः कलत्रद्वययोगवान् ॥ १८६१ ॥

अथवा त्रयमित्याहुर्व्यये मन्दे स्थिते [5]सनि ।
गोप्रियांशे विरभेशे तृतीये शनि[6]संस्थिते ॥ १८६२ ॥

भाग्ययोगं [7]च लभते ह्यल्पसन्तानवान् सुखी ।
मृतप्रजाबहुत्वं स्यादल्पसन्तानशोकवान् ॥ १८६३ ॥

ग्रन्थान्तरे विरभेशे गोप्रियांश[8]समुद्भवः ।
पितृ[9]धर्मस्यपुण्येन पुत्रीपुत्रसमृद्धिमान् ॥ १८६४ ॥

गोप्रियाक्षरसङ्ख्याश्च[10] सोदरास्तु चिरायुषः ।
पुत्रयोगं तथा चिन्त्याच्छेष नाशमितीरयेत् ॥ १८६५ ॥

चन्द्रांशे चत्रिकोणे [11]च स्फुटयोगं गते शनौ ।
जन्मदेशे त्वरिष्टं सा[12]ज्जातस्य गोप्रियांशके ॥ १८६६ ॥

स्वपिता धनलाभादिव्यापारभवकं सुखम् ।
गोप्रियांशके मन्दे [13]तुलालग्नोद्भवस्य च ॥ १८६७ ॥

---

1. विवाहं स्यात्
2. मकरे लग्नजातके
3. शनिर्वक्रे
4. विवाहं स्यान्मीनादित्रयमासगे
5. स्थितेऽथ वा
6. जातके
7. प्रभुर्भवेत्
8. धनांश जातके
9. पिता
10. सङ्ख्यानि सोदरस्य चिरायुषम्
11. योगेन
12. भरिष्टं स्याद्गोप्रियांशस्य जातके
13. मकरे लग्नजातके

सम्पद्दाये सिंहशनौ मातामहविनाशनम् ।
कन्याशनिस्थिते काले स्वपितुः[1] शत्रुवर्गगे ॥ १८६८ ॥

अतीव क्लेशकार्याणि राजवंशेऽ[2]प्यरिष्टदम् ।
तुलाशनौ पितृव्यस्य क्रूरमासे महाविपत् ॥ १८६९ ॥

तत्त्रिकोणे [3]मृतिश्च स्यात् स्वपितृव्यजनावधि ।
स्वर्भानुराशिगे मन्दे शत्रुभांशे त्रिकोणगे ॥ १८७० ॥

स्वगोत्रपरज्ञाते[4]गोचरे मृतिमादिशेत् ।
व्ययेशांशे तत्त्रिकोणे व्ययेशदृष्टिराशिगे ॥ १८७१ ॥

स्फुटयोगं गते मन्दे सन्तानक्लेशमादिशेत् ।
गोमियांशकगे मन्दे क्षेमतारदशान्तरे ॥ १८७२ ॥

स्वपितुः[5] कालमृत्युश्च क्रूरमासे भविष्यति ।
रन्ध्राधिपदशाकाले स्वपि[6]तुर्वेधभुक्तिषु ॥ १८७३ ॥

[7]पितुर्व्याधिभयं च स्याच्छान्त्या शान्तिं प्रयास्यति ।
सन्तानोत्पत्तिना[8]शश्च स्वदेहायासपी[9]डितः ॥ १८७४ ॥

गोमियांशे विपद्दाये स्वभुक्तौ[10] प्रबलं सुखम् ।
क्षेमदाये महाकीर्ती राजद्वारे सुभोगवान् ॥ १८७५ ॥

अधुनाधिक[11]रिपेन नित्यश्रीसौख्यवान् सुखी ।
पापमहान्तरे काले क्षेमदाये कुम्भगे ॥ १८७६ ॥

स्फुटयोगं गते मन्दे सिंहे वा धननाशनम् ।
शनिवत्समपर्याये वृश्चिके गोचरे शनौ ॥ १८७७ ॥

---

1. पिता शत्रु
2. ऽपरिष्टर्
3. मृति चेति
4. स्थितिः
5. स्वपिता
6. पिता वेधभुक्तिषु
7. पितुर्देहभयम्व्याधिशान्तता
8. वर्धते [illegible]
9. पीडनम्
10. स्वभुक्तिस्थार्के
11. स्थाने

स्वशाबल्यं कचित् [1]पीडां स्वपितुर्देहपीडनम् ।
अतीव श्रियमाप्नोति चापे गोचरगे शनौ ॥ १८७८ ॥

[2]मेषत्रिकोणराशीषु स्फुटयोगं गते शनौ ।
तद्राश्याधिपतिक्लेशं विलुवेन प्रजावधि ॥ १८७९ ॥

देशराश्यष्टमे भौमे सुखे वा दशमेऽपि वा ।
स्वर्भानुयोगे तत्काले तद्देशे प्रजावधि ॥ १८८० ॥

देशाधिपतिराशौ वा विलुवेन महाविपत् ।
सर्वनाडीफलं [3]चैव निर्णयं गोपियांशके[4] ॥ १८८१ ॥

सुखाधिपदशान्त्यादौ[5] साधनेशस्त्वभुक्तिषु ।
[6]चन्द्रे च गोपियांशस्थे सुनाधिप[7]दशासु वा ॥ १८८२ ॥

मातामहविनाशादि मातृवंशे महाविपत् ।
स्वपि[8]तुर्भाग्यवृद्धिः स्याल्लक्ष्मीयोगवशात् सुखम् ॥ १८८३ ॥

वर्गोत्तमे विलग्नेशे लग्नारूढे भृगुस्थिते ।
शनिद्वितीयपर्याये लक्ष्मीयोगफलं शुभम् ॥ १८८४ ॥

त्रयोविंशात् परे भाग्य वृद्धिस्तस्य[9] दिने दिने ।
मन्दमे पञ्चमे शुक्रे लग्नेशे विक्रमे स्थिते ॥ १८८५ ।

जन्मधायुष्यपर्यन्तं धनिकः कीर्तिमान् सुखी
मधुमासे झषे मन्दे गोपियांश[10]समुद्भवः ।
लग्नारूढाधिपे शुक्रे पशुधान्यसमृद्धिमान्
भूषणाढ्यो महाभोगी सदाकोयानधर्मकृन्[11] ॥ १८८६ ॥

---

1. पीडा स्वपिता देहमेव च
2. मेषादिराशिगे तेषु
3. चेति
4. प्रियांशगे
5. शान्त्यादि
6. माता
7. दशेऽथ वा
8. स्वपितामाग्य
9. वृद्धिरस्या
10. श्रेयस्य जातके
11. धर्मवान्

